ग्रहाद्यसंभवात् तद्गुणारोपो दुर्वचः अग्न्यातपोपाधिक एव ह्मन्
त्रौष्ण्योपलम्भः । न तथा तयोस्तदुपलम्भोपाधिं कश्चित्पश्या
नच तयोः परस्परोपाधिकत्वं व्याघातात् नियामकाभावाच्च
अतो वन्ह्यातपादिरूपतेजोधर्म एवौष्ण्यमित्यनन्यशरणे प्रत्य
ऽनुमानसहस्रेणापि न तत्कम्पनसम्भव इति। नन्वेवं ज्वालैक्य
त्यक्षेऽप्यनुमानबाधो न स्यात् न तत्रानुमानस्य स्वमूलभूतप्र
त्सविशेषप्रतिक्षेपकत्वाभावात् । नहि तत्र भेदसामान्यादिग्रह
ज्वालैक्यग्रहणोपजीवि भेदप्रतियोगिन ऐक्यस्याप्यन्यत्र सा

---

तत्तजलपृथिव्योरप्यौष्ण्योपलम्भात् कथं वह्नेरन्यत्र तदभाव इ
आह । अग्न्यातपेति । अग्न्यातपयोरन्यतरौष्ण्योपलम्भः
पाधिकोऽस्त्वित्यत्राह । न तथेति । ननु वन्ह्यातपयोरन्यतरस्यान्
स्त्वारोपे उपाधित्वमस्त्वित्यत आह । नचेति । व्याघातादि
स्वाभाविकधर्मवत एवान्यत्र तदारोपोपाधित्वादिति भावः
नियामकाभावादिति । अन्यतरस्वाभाविकत्वे नियामकाभावा
त्यर्थः । अतो वन्ह्यातपादिधर्म एवौष्ण्यमिति परमाद्वितीयपक्ष
वाभ्युपगन्तव्यः । तथा चानन्यथासिद्धत्वाद्वन्ह्याद्यौष्ण्यप्रत्यक्ष
नानुमानबाध्यत्वं किं त्वनुमानस्यैव तद्बाध्यत्वमित्यभिप्रेत्याह ।
त इति । वैशम्यमजानानः शङ्कते । नन्विति । एवमिति
प्रत्यक्षस्यानुमानेन बाधाभाव इत्यर्थः । वैशम्यमुद्घाटयन्
हरति । नेति । उष्णत्वप्रत्यक्षत्वस्यानुष्णत्वानुमानोपजीव्यत
तु तत्र प्रत्यक्षेणानुमानबाधो युक्त ज्वालाभेदानुमाने तु
लैक्यप्रत्यक्षस्यानुपजीव्यत्वात् अनुमानेन तद्बाधो युक्त
भावः । नच तत्रापि स्वप्रयोजकसाध्यधीरूपभेदसामान्यज्ञान
वा पक्षादिज्ञानस्य वा ज्वालैक्यप्रत्यक्षोपजीव्यतास्ति येन तत्रा
प्रतिक्षेप स्यादित्याह । न हीति । ननु ज्वालाभेदप्रतियोगितया
लैक्यप्रत्यक्षं ज्वालाभेदानुमानोपजीव्यमेवेत्यत्राह । भेदप्रतियो
इति । नहि यत्रैव भेदग्रहस्तत्रैवाभेदग्रहस्तद्वेत्तेति नियमोऽस्ति